### प्रेम-गर्विता

●

अयि सखि ममकान्त कामिनीनां कदम्बे,
निजमुखशोभाभिर्जिताऽऽखण्ड चन्द्रो।
क्षणमपि मनसा नो मां विहायानुरागी-
भवति वद तदानीं मादृशी कापि धन्या।।२३।।

### चातुर्य-गर्विता

●

का एताः सखि! पामरा मृगदृशो जानन्ति चातुर्यतां,
कान्तस्वान्त विनोददाननिपुणा यासां न कापि क्रिया।
अस्माकं विकशद्भ्रमत्कमलभा सख्यैव दृष्ट्वानिशं,
कन्दर्पाखिलदर्पसर्पनकरोदासीकृतो माधवः।।२४।।

### मानिनी

●

मानं विमुञ्च तरसा विरसासि बाले!
हालेक्षणा भव विनोदिवरेण साकम्।
देहि प्रभुंक्ष्व विमलाधर बिम्बखण्डं,
चोष्यं सुखाय सुरभेः समयोयथास्यात्।।२५।।

मानं विमुञ्च सखि! शैशवता निदानं
सानन्दतां भज मनोहर रूप कान्त्या।
प्रेयानपि प्रियतमे रतिकान्तकान्त-
र्वासन्तिकश्च समयोऽतिविलासशाली।।२६।।

●प्रेम-गर्विता

●

हे सखि! मेरा कान्त निज़ मुख की शोभा से कामिनी बृन्द में पूर्णचन्द्र ( की आभा ) को जीतनेवाला है, बताओ मेरे सदृश है कोई भाग्यशालिनि इस समय जिसके प्रति अनुराग रखता हो, वह तो क्षण भर के लिए मुझे छोड़ हृदय से किसी में अनुरक्त नहीं होता।२३

चातुर्य-गर्विता

●

सखि! ये सब पशु ( मृग ) सदृश मूर्ख ( गंवार ) चातुर्य कहाँ जानती हैं, उनमें कान्त के अन्तर्मन को मोहित करने वाली कोई क्रिया ( कला ) नहीं, विकसित कमलाभा को भी भ्रम में डालने वाली ( मुखकान्ति ) देखा है सखियों ने, कि कामदेव के ( सुन्दरता वाले ) सभी दर्प को समाप्त कर देने वाले माधव ने मुझे दासी बना लिया है।२४

मानिनी

●

मानिनी! मान का तुरन्त त्याग करो, विरस बनी हे बाले! विनोदक्रिया में श्रेष्ठ ( प्रिय ) के संग हास-परिहास-क्षण बनाओ, सुरभि-काल ( वसन्त-काल ) है, इसलिए अपना विम्बाधरखण्ड चौष्य ( चूसने-हेतु ) सुख-प्राप्ति-निमित्त अर्पित करो।२५

सखि! मान छोड़ो, मान देने वाला यह तुम्हारा दास तुम्हारे चरणकमल-रज में निवस गया। ( तुम्हारे चरणों में नत हो गया है। ), सम्प्रति कामदेव द्वारा छोड़े गये बाणों से क्षतगात्र है, इस ( इसके घावों ) पर तुमको अपने बाहुओं की पट्टी बांधनी चाहिए ( बाहों में आलिंगित करना चाहिए )।२६

मानं विमुञ्च सखि! शैशवता निदांन
सानन्दतां भज मनोहर रूप कान्त्या।
प्रेयानपि प्रियतमे रतिंकान्त कान्त-
र्वासन्तिकश्च समयोऽतिविलासशाली।।२७

मानं विमुञ्च महिले चल कुञ्जगेहं,
कान्तस्त्वदीय पथि विस्तृत नेत्रपद्मः।
यत्रानिशं विकचमञ्जुल मालतीना-
मास्वादने विलुलिता भ्रमरा बसन्ति।।२८।।

**प्रोषित्पतिका**

●

सैवेयं सखि! चन्द्रिकासुविमला रात्रिस्तु सा माधवी,
शय्या सैवविधूतचन्द्रक मदाहारा मनोहारका।
सैवेयं द्रुमवाटिका कुसुमिता सैवाप्यहं माधवे,
नैकेनैवं विना विभाति सकलं मां कूटायितम्।।२९।।

चन्द्रचण्डकरं निवारय सखि! त्वं गन्धवाहं वदेत्,
[१]मा मोदं कुमुद-प्रसून-वनिका-जातं पुनर्मानय।
चम्पकं मकरन्द हाश[२] दहनेनानन्दविध्वंसनं,
भूमौ प्रक्षिप चन्दनं मम तनौ कामज्वरो निर्ज्जरः।।३०।।

**खण्डिता**

●

किं रुष्टासि विलोलशोणनयनेरुष्टानमापेक्ष्यते,
किं ब्रूषे भ्रमवद्वचः सुचतुरे भ्रान्तिस्तु ते वक्षसि।
ईहे गन्तुमितः पुनर्नहि कदात्रह्यागतस्त्वं गृहे,
श्रुत्वा चेत्यमनङ्गिनाशुहरिणा कान्ता समालिङ्गिता।।३१।।

---

१. माऽऽमोदं
२. हाऽऽशु

सखि ! शैशवता निदान ( **शैशवता रूप सोपान** ) मान को त्याग, मनोहर रूप कान्ति-संग आनन्द-लाभ लो, रतिकान्त रूप प्रियाधिप्रिय प्रियतम तथा अत्यन्त विलासशाली यह बासन्तिक समय है प्रियतमें !२७

हे विलासप्रिये ! मान का त्याग कर कुंजगृह की ओर चल, जहाँ ( तुम्हारा ) कान्त तुम्हारे मार्ग में कमलनेत्र विछाये हुए हैं तथा जहाँ निरन्तर विकसित सुन्दर मालती ( **पुष्प के रसास्वाद के लिए** ) विहरणशील भ्रमर रहते हैं।२८

**प्रोषित्पतिका**

•

सखि ! यह वही स्वच्छ चन्द्र-ज्योत्सना, वही माधवी, वही रात्रि, त्यक्त वही शय्या, वही मनोहर, मदहर ( शीतल ) चन्द्रमा, वही फुल्लवाटिका हैं, वही मै भी हूँ, ( परन्तु ) एक उसी (प्रिय) के बिना, समय की छली मुझे यह सब अच्छा नहीं लगता।२९

सखि ! चन्द्रमा की प्रचण्ड किरणों को दूर करो, वायु से तुम यह कहो, कुमुदपुष्पवाटिका से उत्पन्न आनन्द पुनः ( इस ओर ) न लाये, चम्पक-मकरन्द दग्ध करने वाले आनन्द विध्वंसक है, चन्दन भूमि पर फेंक दो, मेरा देह कामज्वर से जर्जर है।३०

**खण्डिता**

•

चंचल-रक्ताभ नेत्रों वाली रुष्ट क्यों हो, रोष उचित नहीं, सुचतुरे तुम्हारे वक्ष पर मनोगत उद्विग्नता प्रकटित है ( फिर ) भ्रमित करने वाले वचन क्यों? यहाँ से जाना चाहता हूँ पुनः यहाँ तुम्हारे घर कब आऊँ ( **अनिश्चित, नहीं आऊँगा** ), ऐसा सुनकर अनुरागासक्त ( प्रिया ) हरि ( प्रिय ) से आलिंगित हो गयी।३१

कान्ते! किं तव जीवबन्धुतुलितो नेत्रान्तरे शोणिमा-
माराधनतत्पराक्षि नलिनच्छाया तवाभासते।
तत्किंभ्रुधनुरेतदग्रमुटितं कामस्य कोदण्डजित्-
प्रोत्फुलामिव सन्ध्यकां नभसिते चालोक्य वक्रप्रभाम्।।३२।।

वक्षस्ते खल[१] कुङ्कुमाङ्कितमिदं दृष्ट्वाकथं शीतलं,
मे ते कज्जलरेखकाधरदलं चालोक्य मे कम्पते।
वाणी ते स्खलदक्षरां कितविनी श्रुत्वाकथं मेखरान्[२],
स्याद् यत्र विलासिनी पुनरितस्तत्रैव गच्छाधुना।।३३।।

किं नेत्रे विमुखी करोसि कुमते सर्वसुखं मान्मथं,
प्रत्यक्षं वदति प्रकाममलिकेलग्नस्तु लाक्षारसः।
भूयस्त्वं विनिवारितोऽपि पुनर्गच्छेति तस्यागृहे-
यातस्तत्र तथापि सुदृशे इत्युत्त्वा हरि...[३]।।३४।।

**कलहान्तरिता**

●

किं कृतं सखि! मया लघुमेधया,
नादृतो हि खलु जीवनवल्लभः।
मीनकेतुरधुना करकोटकैर्मे-
भिनत्तिहृदयं निज सायकैः।।३५।।

---

१. खलु

२. मे स्वरान्

३. अस्पष्टो पाठः

कांते ( प्रिये ) तुम्हारे बन्धुक कुसुमोपम नेत्रों में लालिमा कैसी, क्यों, तुम्हारे नेत्र कमलों में आराधन की तत्परता ( प्रिय के प्रति अनुराग-भाव ) आभासित है ( फिर क्यों? ), निर्मल आकाश में वक्रप्रभा ( अस्त होते सूर्य ) को देखकर प्रोत्फुल्ल ( पुलकित ) सन्ध्या के सदृश, कामदेव के धनुष ( बाण ) को जीत लेने वाले (तुम्हारे) भ्रू-धनु का ( अग्रभाग ) कोर लांछित क्यों है?३२

कुंकुम से लेपित तुम्हारा वक्षस्थल देखकर निश्चय ही शीतलता मिली, कज्जलरेख वाली ( कज्जल से आंजी आंख वाली ) अधरदल कम्पित क्यों है? मेरे स्वर सुनकर कितविनी तुम्हारी वाणी लड़खड़ा क्यों रही है, विलासिनी, यदि ऐसा है ( तो इच्छानुकूत ) जहाँ चाहो, यहाँ से अब वहाँ ही जाओ।३३

नेत्रों से विमुखता क्यों दिखाती हो, हे कुमते, तुम्हारे ओष्ठों के लाक्षारस कामप्रबोधित सुख ( कामना ) स्पष्टत: प्रकट कर रहे हैं, बार-बार रोकने पर तुमको उसके घर नहीं जाना चाहिए, यहाँ से इतने पर भी वहाँ गयी, सुनेत्रे फिर तो यह तुम्हारी धूत्तर्ता है, ऐसा हरि ( प्रिय ) ने उससे कहा।३४

**कलहान्तरिता**

●

हे सखि। छोटी ( मन्द ) बुद्धि मैंने यह क्या कर डाला जो जीवनवल्लभ ( प्राणप्रिय ) को आदर न दिया, अब कामदेव अपने तीक्ष्ण बाणों से मेरे हृदय को खण्ड-खण्ड करने लगा।३५

## विप्रलब्धा

●

प्रोत्फुल्लामलमञ्जुकुञ्जभवने शप्तासि सा कामिनी,
पश्यंती वनमालिनं नहि तदा तस्माद्दृशान्याऽभवत्।।
चित्ते कातरिमा तनौ शिथिलिमा वक्त्राम्बुजे पीतिमा,
पादे चाचलिमा[१]क्षिणोश्चकितिमा दूतीजनेचण्डिमा।।३६।।

## स्वाधीनपतिका

●

गेहे सन्ति सहस्रशोपि सुदृशो लावण्यलीलावली
बिभ्रत्य: सुमनोरमां स्ववचसा याभिर्जिता: कोकिला।
दीप्यन्मञ्जुल भूरिभूषणभरा: प्रोत्तुङ्गवक्षोरुहा:,
कान्तो नैव तथापि सास्नुनिरतो[२]...संसक्तिवान्।।३७।।

## अभिसारिका

●

साटी चारुसुवर्णताररचितां वालेप्यधोवस्त्रकं,
पीतं गुर्ज्जरसम्भवं च कुचयोर्हेमाञ्चिता कञ्चुकीम्।
भूषास्त्वं परिधाय पीतमणिमञ्जूषाश्च पीताम्बरे-
स्त्वामाकारयते वसन्तकुसुमाटव्याञ्चलाशु प्रिये।।३८।।

## उत्कण्ठिता सामान्या

●

क्वगत:करकङ्कणमण्डनक:,
प्रविहायरतिं मम भावततिम्।
इतिवारवधूर्वसुलाभरता
विललाप चिरं सुललामतनु:।।३९।।

---

१. माऽक्षि

२. अत्यस्पष्टो पाठ:



उत्कण्ठिता

**विप्रलब्धा**

●

कामिनी ( **प्रिया** ) कुसुमित निर्मल ( **सुन्दर** ) कुंज भवन में पहुँची, वनमाली को नहीं देखा ( **न देखकर** ) तब उसकी दशा भिन्न हो गयी–चित्त में शोक, ( **क्षोभ** ) शरीर में शिथिलता, कमल-मुख पर पीताभा, चरणों में चंचलता, नेत्रों में आर्द्रता और दूतीजन के प्रति रोष का संचरण हो गया।३६

**स्वाधीनपतिका**

●

गृह में सहस्त्रों सुनयना लावण्यवती क्रीड़ाप्रिय, कोकिल को भी अपनी मनोरम वाणी से जीत लेने वाली, सुन्दर आभूषणों से सज्जित दीप्तिवती तथा उन्नत उरोजों वाली हैं, तथापि ( **मेरा** ) कांत ( **प्रिय** ) मुझमें आसक्त रह, किसी से भी घनिष्ठता नहीं रखता।३७

**अभिसारिका**

●

बाले ! सुनहरे तारों से निर्मित्त साटिका ( **साड़ी** ), गुर्जर प्रदेशनिर्मित अधोवस्त्र और कुचों पर स्वर्ण जटित अंगिया, ऐसे अलंकृत परिधान धारण कर पीतमणि ( **पोखराज** )–मंजूषा तथा पीतवस्त्रों से प्रिये ! इस वनांचल को वासन्तिक कुसुमों वाला बना रही हो (**तुम्हारे इस रूप में जैसे वन में वसन्त की छटा रूप धर बैठी है** )।३८

**उत्कण्ठिता सामान्या**

●

मेरे हाथों को कंकण से अलंकृत करने वाला, मेरे ( **प्रेम** ) भावों की भूमि, अनुराग ( **मेरे प्रति** ) त्याग कर कहाँ चला गया? इस प्रकार (**सुतनु; धन-लाभ में तत्पर बारवधू** ) वह गणिका अत्यधिक ( **बहुत देर तक** ) रोने लगी।३९

प्रस्फूर्जत्प्रभयारुणस्य हिमगोः पीतप्रभारश्मजः
प्रोत्फुल्लामलमञ्जुकुञ्ज वनिका मोदावहो मारुतः।
चक्री चक्रमिता वदन्ति चटकाश्चुञ्चूरवं चेटिके
रात्रिः प्रोज्जलिताऽखिला परमहोनाद्यागतोमाधवः।।४०।।

मालाकार गृहेगतः किमुततस्ताम्बूलिनः सन्निधौ,
हट्टायां किं सुगन्धिनः सुरभये किं मित्रगोष्ठ्यां स्थितः।
किंवा काचिदनङ्गमण्डित तनुः प्राप्तामनोहारिणी,
तस्या एव निकेतने निवसितो हा नागतो माधवः।।४१।।

**इमे द्वे स्वीये ।**

**वासकसज्जा**

●

मालां गुम्फति मञ्जुलाम्बुजमुखी हालां पयः शीकरैः,
कुर्वाणा शिशिरां सुगन्धि कुसुमैरामोदितां तल्लिपकाम्।
वासोभिश्च विभूषणैरतुलभैः श्रृङ्गारतन्वती[1]
बाला स्वावयेषु पश्यति मुदा मार्गं मनोहारिणः।।४२।।

**प्रोषित्पतिका**

●

श्रुत्वा श्वः प्रियमालितः परदिने गन्तुं समुत्कण्ठितं,
बाला व्याकुल मानसां तु शनकैर्भूयो रुदन्ती रुहः।
विज्ञायाशु कदा क्व यामि च कया प्रोक्तं मृषा भ्रांतित-
श्चेत्थं दीन इवा प्रसादयति इमां कृष्णः शतैशापथैः।।४३।।

---

१. श्रृङ्गारमातन्वती

चन्द्रमा प्रातःकालीन सूर्य की किरणों की पीत प्रभा से दीप्त हो रहा है, मंजुल कमल की वनी विकसित हो गयी, आननन्दित करने वाला मारुत चलने लगा, चक्रवाक-चक्रवाकी मर्यादित हो बोल रहे हैं, चटक ( **गौरैया पक्षी** ) चिंचियाने लगा, समस्त वातावरण प्रकाशित हो चुका किन्तु अहो, आज माधव न आये।४०

मालाकार-गृह चले गये अथवा ताम्बूलिनि ( **तमोलिनि** ) के समीप, हाट के सुगन्धित विक्रेता, सुरभि-हेतु अथवा मित्रों की गोष्ठी में स्थित हो गये क्या? अथवा कदाचित् कामविमोहित कोई मनोहारिणी ( **कामिनी** ) प्राप्त हो गयी, उसी के भवन में निवसने से नहीं आये माधव।४१

## दो स्वीया

### १. वासकसज्जा

●

मंजुल कमल मुखी बाला माला गूंथती शीतल जल युक्त शरबत ( **हाला** ) तैयार करती, शैय्या को सुगन्धित पुष्पों से शीतल करनें में तत्पर, हर्षाती, वस्त्राभूषणों से अपने अंगों को अनेकशः सज्जित करती हुई ( **मुदित मन** ) मनहर ( **प्रिय** ) का मार्ग देख रही है। ४२

### २. प्रोषित्पतिका

●

पिछले दिन सखि से ( **यह** ) सुनकर कि प्रिय, कल जाने के लिए उत्सुक ( **जाने वाला** ) है, बाला ( **प्रिया** ) को व्याकुल हृदय रुदन ( **शनैः शनैः अत्यधिक** ) करती जान, शीघ्र ही कब, कहाँ जाता ( **जानेवाला** ) हूँ और किसने कहाँ? असत्य है, कृष्ण उस व्यामोहित ( **उद्विग्न** ) को सैकड़ों शपथ लेकर सान्त्वना देते हैं। ४३

### आगतपतिका

●

आयातो दयितस्तवेति वचनं श्रुत्वा सुधास्पर्द्धितं,
बालाया पदयो दुःखदलितैरंगैः कृतं चेष्टितम्।
तज्जानीहि विलोचनं सुललितानन्दाश्रु भृङ्गकौ
स्वेदार्द्रौ च पयोधरौ पुलकितौ कायः सकम्पोऽभवत्।।४४।।

### आगमिष्यत्पतिका

●

बाले! मा कुरु खेदमद्यरमणः सत्यं समायास्यती-
त्येवं पान्थजनः समेत्य सहसा सानन्दितं प्रोक्तवान्।
वाचं चारुफलां वदत्ययमहो का कोपिहर्म्यस्थितः
कान्तश्चुम्बन लालस्तवमुखे स्वप्ने मया लक्षितः।।४५।।

### नायकस्य पूर्वानुरागः

●

क्वचिद्भूमौ माला क्वचिदपि च वंशीगतरवा,
क्वचित्पीतं वासः क्वचिदपि किरीटं निपतितम्।
क्वचिद्यष्टिस्त्वेयं जलधररुचिर्विस्मृतवपुः-
यतोराधे! किं ते नयनविशिखाभ्यां कृतमिदम्।।४६।।

## आगत्पतिका

●

'तुम्हारा प्रिय आया है' ऐसा अमृत वर्षी वचन सुनकर दुःख निवारित हो जाने से बाला के पैरों में आनन्दाभिनय की क्रिया होने लगी, यह जान (ऐसी स्थिति में ) स्तनों में पुलकन नेत्रों में क्रीडा के आनन्दाश्रु एवं देह कम्पायमान हो उठा।४४

## आगमिष्यत्पतिका

●

'बाले ! शोक मत करो, आज रमण ( प्रेमी ) सत्यतः आयगा 'ऐसा ( इस प्रकार ) एक पथिक ने सहसा पहुंचकर सानन्द कहा, प्रिय फल देने वाली वाणी यह बोल रहे हो, अहो ! ( विस्मय है ) क्या हर्म्य ( प्रासाद ) भवन में कोई उपस्थित है? ( उत्तर में ) कान्त, चुम्बनातुर तुम्हारे मुख में मैंने संकेतित किया था। ४५

## नायक का पूर्वानुराग

●

राधे ! तुम्हारे नयनशरो द्वारा यह क्या कर दिया गया। ( तुमने अपने नयनशरों द्वारा यह क्या किया– ) माला कहीं भूमि पर ( गिर गयी ), वंशी का स्वर किसी ओर ( अर्थात् वंशी का स्वर लय विरुद्ध ), पीताम्बर कहीं ( अस्त-व्यस्त ), किरीट कहीं निपतित हो गया, तथा मेरी यष्टिका कहीं, इस प्रकार श्याम मेघकान्तिरूप अपना शरीर विस्मृत कर बैठे। ४६

**विरही नायकः**

●

रे रे चन्द्र चकोर चञ्चुपुटकैः पेपीयते ते सुधा,
क्षीणा नैव तथाप्ययोगिदहने पीनैव सा राजते।
दुष्टस्तेप्यनुमासमेत्यहरिणः पञ्चाननं नो मृतो,
हा कष्टं मुखमीक्षणेमृगदृशश्चालोकयिष्ये कदा।।४७।।

**इति श्रीमदगौडविप्रवरबाबूरायमिश्रात्मज सुखलाल मिश्र विरचितायां श्रृङ्गारमालायां नायिका भेद वर्णनं नाम प्रथमं विरचिनम्।१**

●



## विरही नायक

●

अरे चन्द्र ! चकोर अपने चञ्चुपुटक से तुम्हारी सुधा–ज्योतसना का निरन्तर पान करता है, तथापि क्षीणता नहीं, वियोगिजनों को दग्ध करने के लिए सशक्त (हृष्ट-पुष्ट) ही (शोभायमान) है, आखेटक (हरिणों का हतक) पंचानन-सदृश, प्रत्येक मास आकर सन्तप्त करता, मुख-दर्शन का कष्ट है, हे मृगनयनी कब देख पाऊँगा? (यहाँ चन्द्र ज्योत्स्ना को सिंह और नायक को हरिण, कह रहा है कवि, उसके रहते मृग छिपे रहते हैं, दिखायी नहीं देते, तथा नायक (प्रिय) प्रिय को देखने से वंचित सन्तप्त है)।४७

इति श्रीमदगौड विप्रवर बाबूरायमिश्रात्मज सुखलाल मिश्र विरचित
'श्रृङ्गारमाला' में नायिका भेद-वर्णन
नामक पहला विरचिन।१

●





उद्यद्विद्युत्मन्दकान्तिरुचिरा ताम्बूलताम्राधरा:,
राकाचन्द्रमुखी विलोलविलसन्नेत्राञ्जनासुस्मिता।
कौसुम्भातिमनोज्ञ चारुवसना निर्दोषभूषा-वृता,
कान्तानिर्जितपद्मगन्धनिचया दृष्टाद्य सा कामिनी।।७६।।

[ विद्युत-सी मंद ( मधुर ) कान्ति-से सुन्दंर, ताम्बूल-से ताम्र ( लाल ) अधर, अंजन से शोभित विलोल ( चञ्चल ) नेत्र, पूर्णमासी के चन्द्र-सम सुस्मित ( मुसकराता ) मुख, कुसुम्भी रंग का अति मनोज्ञ वस्त्र धारण किये, सुन्दर आभूषणों से भूषित, पद्मगन्ध की समग्रता को पराजित कर देने वाली लावण्यवती, आज ऐसी वह कामिनी मैंनें देखी।७८ ]

•

## द्वितीयं विरचिनम्

●

### अथ नायिका शिखा-नख-वर्णनम्

**तत्र शिखा-वर्णने**

●

गुम्फिताऽरुण गुणैर्जलजाक्ष्या,
मालतीकुसुम दामनिबद्धा।
नीलकान्तिरुचिराशुचिवेणी,
वेणिके वनजहाति मनो मे।।४८।।

●

केशा केशाः सुकेशि तव चारु सुनील वेषा,
ये स्वीयभा विजितशेषकुलेरगेशाः[१]।
केशावपि प्रणमतः सखियत्र कृष्ण-
स्तेषां सवीक्षणविलासनिबद्ध तृष्णः।।४९।।

**सीमंतरेखा**

●

सुधादीधितेर्दीधितिः किं तमोभि-
र्गृहीता वने यामुने वारि गाङ्गम्।
किमाद्येरसे पद्धतिर्हास्य वेषां,
किमेषाङ्गनायाः सु सीमन्तरेखाम्।।५०।।

---

१. कुलेरोरगेशाः

# दूसरा विरचिन

•

## नायिका शिखा-नख वर्णन

### शिखा-वर्णन

•

लाल धागों से गुंथे हुए मालती पुष्पों के हार से निबद्ध, नीलकान्तिं-से दीप्त ( **श्यामवर्ण** ) सुन्दर ( **अनाविल** ), कमलनेत्रा ( **कामिनी** ) की वेणी ( **वेणिका** ) मेरे हृदय को आघातित करती है।४८

हे सुकेशि ! तुम्हारे सुगन्धित, सुन्दर श्यामरंग वाले केश जो अपनी वेश-कान्ति द्वारा सर्पराज के समग्र कुल को विजित कर चुके हैं। ( **करने वाले हैं, अत्यधिक काले** ) जिन केशभूषित ( **नायिका जनों** ) के प्रति कृष्ण प्रणत-विनत हुए, उसी प्रकार दृष्टि, विलास-निमित्त ललक है।४९

### सीमंत रेखा

•

सुधा की आभा से प्रकाशित दीप्ति क्या अन्धकाराच्छन्न हो गयी है, या यमुना के जल में गंगा का जल है? अथवा विलासरस ( **रागायित** ) से पूर्व ( **नायिका का** ) परिहास रीति-सदृश यह अंगना ( **नायिका** ) की सीमंतरेखा है ( **नायिका की सीमन्तरेखा-अंधकाराच्छन्न सुधा-दीप्ति के समान है, या यमुना-जल में गंगाजल-संगम अथवा रागातिशयता से पूर्व परिहास-रीति है?** )।५०

## ललाटम्

•

कृष्णाष्टमीचन्द्रमसोऽर्द्धबिम्बं,
किं षट्पदैः सेवित पद्मपत्रम्।
सौभाग्यवर्णावलि पट्टिका किं,
सकुंतलस्ते सखि! भालदेशः।।५१।।

## कर्णम्

•

अयि विमलद्युति वदने!
श्रवणस्तेकस्य नो मनोहरति।
प्रियगुणगणमुक्तानामा–
धारः शुक्तिका किमियम्।।५२।।

## भ्रूवौ

•

पंक्तिः किमु मिलिन्दानां,
कामदेवस्य वा धनुः?
शृङ्गारवृत्ततिर्मेरो
सुभ्रुवः सुभ्रुवाविमे।।५३।।

## नासिका

•

किंशुकस्यहतगर्विताशया,
मीनकेतननिषंगदासया।
मानसं मम हतं सुवासया,
नासया तिलप्रसूनहासया।।५४।।

ललाट

•

सखि ! तुम्हारा भालदेश ( ललाट ) कृष्णपक्ष की अष्टमी का अर्द्धचन्द्र बिम्ब है अथवा भौरों से सेवित ( युक्त ) कमलपत्र ? अथवा केशराशि-संयुक्त भाग्यरेख-लिपि-पट्टिका है? ( काले केशरूप अक्षरों से गौरवर्ण भाल पर यह तुम्हारे सौभाग्य की लिपि अंकित कर दी गयी है )।५१

कर्ण

•

अयि ! निष्कलंक सौन्दर्य-मुखि ! तुम्हारे कर्ण किसके हृदय का हरण नहीं करते ( सबको अच्छे लगते ) हैं, यह क्या, प्रिय के गुण समूह रूप मोती के लिए सीपी हैं?५२

भ्रूवौ

•

हे सुभ्रुवे ! ( सुन्दर भौंहोवाली ) तुम्हारी भौंहे भ्रमरपक्तियाँ हैं अथवा कामदेव का धनुष या शृङ्गार-रीति के विस्ताररूप मेरु हैं?५३

नासिका

•

किंशुकवर्ण को विजित कर गर्वित ( किंशुक वर्ण-श्रेष्ठ ), कामदेव के तरकश-शर रूप, तुम्हारी नासिका जिस पर तिलरूप कली विकसित है, ने मेरे हृदय को मुग्ध कर लिया।५४

## नयने

●

दीनतां भजति मीन पीततां–
पङ्कजं भवति रङ्क जन्तुवत्।
खञ्जनः सखिनचित्त रञ्जन–
स्तावकीन नयने विलोकिते।।५५।।

●

अहो न कारुण्यमुदेति चित्ते,
तवातिदीनस्य तु पीडनेन।
यतः खराग्रैनयनां तया तैः
शरैर्मनो मे तरसा भिनत्ति।।५६।।

## कपोलौ

●

कपोलाविमौ ते विलोलाक्षि गोलौ,–
स्थलाम्भोरुहा रक्तभाभिस्त्वतोलौ।
मनोजन्मनः किं सुखायोपधानौ,
रतेः सङ्गरे कृन्तनादिप्रधानौ।।५७।।

## मुख

●

मुखमदोषमिदं तव भामिनि[1]
प्रीतिदिनं प्रभया किल वर्द्धते।
नयन चारु सरोजयुतं तदा,
वद कथं तुलनां लभते शशी।।५८।।

●

---

१. भामिनी

## नयन

•

तुम्हारे नेत्रों के देखे जाने पर मीन दीनता को प्राप्त हो जाता है, कमल सामान्य जन्तु ( प्राणी ) सदृश विपन्न ( सौन्दर्यहीन ) एवं खञ्जन सखिजन के चित्त का अनुरंजक हो जाता है।५५

अहो! ( आश्चर्य ) इस अतिदीन को पीड़ित करते समय तुम्हारे हृदय में करुणभाव नहीं उदय होते क्योंकि नयनों के तीक्ष्ण शर की नोकों से मेरे हृदय को शीघ्र ही खण्डशः कर देती हो।५६

## कपोल

•

विलोलाक्षि ( चंचल नेत्रा ) तुम्हारे ये दोनों गोल कपोल-स्थल कमल की रक्ताभा से भी अतुल्य हैं, क्या ये कामदेव के सुखार्थ उपधान ( तकिया ) हैं, अथवा रतिक्रीड़ा-रूप संगर में कृंतनादि अस्त्रों के प्रमुख हैं।५७

## मुख

•

भामिनि! तुम्हारे दोष-रहित इस मुख की कान्ति प्रतिदिन बढ़ती रहती है, सरोज-सदृश सुन्दर नेत्र फिर, बोलो, चन्द्रमा की तुलना कैसे प्राप्त करें ( अर्थात् नहीं )।५८

आननं सखि निरङ्कमिदं ते,
यामिनीपतिरसौ सकलङ्कः।
वारिजं जडमिदं तु सलीलं,
दर्पणेन समतास्य कथं स्यात्।।५९।।

**दन्त**

•

दाडिमीहृदयं भिन्नं छिन्नं मुक्ताफलस्य च।
वज्रे तु पतितं वज्रं त्वदीय दशनेर्ष्यया।।६०।।

**अधराः**

•

विद्रुमबिम्ब विधूपा निजनिभयै वाधरीकृता येन।
अयि दयिते तव तस्मादधर इति ख्यायते मनुजैः।।६१।।

**वाणीस्मिते**

•

बुधा वाचि बाले! मुधा वर्णयन्तः
सुधा साम्यतां तान् क्रुधा किं बदामि।
यतश्चन्द्रिका तन्द्रिकामातनोति–
स्मितं ते भवेत्कस्य नो विस्मयाय।।६२।।

**सीतलचिबुकं**

•

चिबुकमध्यगतं शितिलक्षणं,
रसिकमानसमोहन दक्षिणम्।
स्थलजपुष्पपरागरसश्रितः,
किमु सखे सु विभाति मधुव्रतः।।६३।।

तुम्हारा मुख हे सखि! निष्कलंक है, यह यामिनीपति ( चन्द्रमा ) सकलंक, यह वारिज ( कमल ) निर्जीव वस्तु है, क्रीडाशील, दर्पण के संग भी समता कैसे सम्भव है।५९

**दंत**

●

दाडिम ( अनार ) के हृदय-खण्ड एवं मुक्ताफल के विदीर्ण अंश-सदृश हैं, तुम्हारे दांत, देखने पर ईर्ष्यावश वज्र ( हीरा ) पर तो वज्रपात हो गया ( अर्थात् दंतच्छवि हीरा से भी अधिक चमकीली है )।६०

**अधर**

●

प्रवाल ( मूंगा-मणि ) ने अपने विम्ब को ही छद्मरूप में अधरीकृत ( ओष्ठ बना दिया ) इस कारण हे दयिते! मनुष्यों द्वारा अधर कहा जाने लगा।६१

**वाणी स्मित ( मुसकान )**

●

बाले! वाणी को सुधा के समान बुधगण व्यर्थ ही वर्णित करते हैं, क्रोध आता है, उनको क्या कहूँ ( कहा जाय? ) चन्द्रिका ( सुन्दर चन्द्र-ज्योत्स्ना ) प्रायः तन्द्रिका ( अलसता, निद्रालुता ) उपजाती है, फिर तुम्हारा स्मित (मुसकान) किसके लिए विस्मय पैदा करनेवाला नहीं है? ( अर्थात् विस्मयकर है ही )।६२

**सीतल चिबुक**

●

चिबुक के मध्य स्थित ( काला ) लक्षण ( चिह्न ) रसिकजन के हृदय को मोह लेने में निपुण है, सखे! क्या यह स्थंल कुसुम के परागरस में लीन भौंरा तो नहीं?६३

### ग्रीवा

●

कम्बु कपोती कलतां स्वर–
वलितां मधुरिमाणमादधती।
वीणा कोकिल सुर वा–
नव पा राजते ग्रीवा।।६४।।

### बाहू

●

बाहू मृणाल सदृशौ सुदृशोंग[1]नाया,
रीतिस्तयोः प्रियगले मिलने विचित्रा।
संतापमाशु हरतः सततं निदाघे,
शैत्ये च शैत्यमनिशं कुरुतः प्रकामम्।।६५।।

### करौ

●

कराविमौ मृदूज्वलौ स्फुरत्सरोजमञ्जुलच्छवि–
छटाविलासिनौ सुपद्मराग-हासिनौ।
जवाम्बुजन्मतोरणालयात्मजध्वजाङ्कितौ,
मनोभवाऽभय प्रदौ च कामिनः सुलक्षणौ।।६६।।

### स्तनौ

●

स्तनावेव ते वर्तुलौ श्रीफलाभौ,
मनोहारिणौ कामिनां कामलाभौ।
मनोजन्मनो वाटिका पुष्पगुच्छौ,
किमेतौ खगौहेमकुम्भौ किमच्छौ।।६७।।

---

१. सुदृशोऽङ्गनाया

**ग्रीवा**

•

कम्बु-सदृश ( **तुम्हारी-नायिका की** ) ग्रीवा, कपोती के मधुर-स्वर से युक्त माधुर्य धारण किये, वीणा के नव आलाप अथवा कोकिल-स्वर सदृश शोभाशालिन है।६४

**बाहू**

•

सुन्दर अंगना ( **नायिका** ) के दोनों बाहु कमलनाल सदृश ( **कोमल** ) हैं, प्रियालिंगन की उनकी रीति बड़ी विचित्र है–निदाघ ( **ग्रीष्म** ) काल में संताप को तुरंत दूर करते हैं, शीत ( **शिशिर** ) काल में सदा उष्णता प्रदान कर मन-भर ( **यथेष्ठ** ) आनन्द देने वाले हैं।६५

**कर ( दोनों )**

•

ये दोनों हाथ सुकुमार हैं, श्वेतकमल-सदृश लरजते सुघर छवि बिखेरते, सुन्दर लीला विस्तार करते, पद्मराग-मणि-सी आभा-युक्त हैं, मीनध्वज-चिह्नित ( **जवाम्बु-जन्मतोरणालयात्मज ध्वजांकितौ** ) लक्षणों से पूर्ण, कामिजनों के लिए मनोभव (कामदेव से) अभय करने वाले हैं।६६

**स्तन**

•

ये वर्तुलाकार ( **गोलाकार** ) श्रीफल-सदृश छवियुक्त मनोहर स्तन कामिजनों को कामेच्छा का लाभ देने वाले क्या कामदेव-वनिका के पुष्पगुच्छ हैं अथवा स्वर्ग के स्वर्ण कलश।६७

उदरम्

●

उदरं हि कृशोदर्यां गुणानामिवसम्पुटम्।
नागवल्लीदलनिभं कोमलं रुचिरं स्मरे।।६८।।

रोमालिनाभी

●

नाभिरियं तव सरसी सरस-
सुमनसां प्लावने हि निपुणा।
कथमुद्धारस्तेषां न भवति-
चेदरोमराजिका रज्जुः।।६९।।

कटि

●

दृष्ट्या द्रष्टुमशक्या स्तन-
गिरिभारं न चेद्धिका वहति।
इति मृदु पृथु जघनाया अनु-
मिति गोचरा ते कटिर्जयति।।७०।।

नितम्बौ

●

यज्जवनो रतिपतेः किमु वेदी,
कुम्भकार-वर-यौवन चक्रम्।
भातिरूपतटिनी पुलिनः किं
किं नितम्ब युगलं जलजाक्ष्याः।।७१।।

### उदर

•

उदर निश्चयतः कृशोदरी ( **क्षीण कटिवाली नायिका** ) के गुणों की रक्षणपेटिका के समान, नागकेसर-पत्र-सदृश कोमल एवं सुन्दर है।६८

### रोमावलिनाभी

•

तुम्हारी यह नाभि रसिक हृदयों ( **जनों** ) को मग्न कर देने में निपुण सरसी ( **सरोवर** ) है, यदि रोमराजि ( **रोमावली** ) रूपी रज्जु ( **रस्सी** ) न हो तो उनका उद्धार ( **निकलना** ) कैसे होता ( **असम्भव है** )?६९

### कटि

•

उन्नत स्तन भार वहन करनेवाली कोमल-विस्तृत जघना ( **विस्तृत जांघ वाली नायिका** ) की दृष्टि से दिखायी पड़ने में असम्भव, अनुमान से दिखायी पड़नेवाली कटि जय करे ( **हे कोमल-विस्तृत जघना! उन्नत स्तन भार धारण करने के कारण जो दृष्टि में न आये, वह अनुमान से देखी जाने वाली तुम्हारी कटि जयकरी हो** )।७०

### नितम्ब

•

कंमलनयनी ( **नायिका** ) के नितम्बयुगल कामदेव की यज्ञ-वेदिका हैं या कुम्हार की चाक पर रूप धरे श्रेष्ठरूप यौवन है ( **प्रजापति ब्रह्मा द्वारा निर्धारित आयु-चक्र रूप-क्रम में सर्वोत्तम यौवन** ) अथवा लावण्यमयरूप सरित के दो तट हैं।७१

## पृष्ठाम्

•

अयि गजगामिनि पृष्ठं-
विधिना सृष्टं न तादृशं दृष्टम्।
विलसति किमुत नवीनं-
छदनं बाले! तम्बोरु रम्भायाः।।७२।।

## मदन-सदन

•

समस्त सौख्यामृत सारधारकं,
पिकप्रसूनच्छवि गर्वहारकम्।
त्रैलोक्यसौन्दर्य भरं त्रपारकं
वराङ्गमेतत्तु भजेन्नकः पुमान्।।७३।।

## जघने

•

कठिनता करिकरेषु विशाला,
कदलिकासु जडताऽति कराला।
विधिकृतास्तु करभे बहुरेखा,
जघनेस्तव कथं समता स्यात्।।७४।।

## सनखचरणौ ( कवित्वं )

•

चन्द्रनखद्युतिभिः परिशोभित चारुतराङ्गुलिभिर्वरमानम्।
कामनिषंगनिसेवित कान्ति मृदूज्ज्वलवेषमरालसु पानम्।
पादयुगं सुतलं सुतनोः सुलक्षणलक्षित रागनिधानम्।
यावकरञ्जितमञ्जुमनोहर नूपुरसिञ्जितकञ्जसमानम्।।७५।।

**पृष्ठ ( पीठ )**

●

अयि गजगामिनि ! विधि ने तुम्हारा पृष्ठ ( **पीठभाग** ) जो निर्मित किया है, वैसा देखा नहीं ( **इससे पूर्व** ), बाले ! क्या यह रम्भा के तम्बूरे का नवीन आच्छादन ( रूप ) शोभित हो रहा है?७२

**मदन-सदन**

●

समस्त सुखों के अमृतरूप रस को धारण करनेवाला, पिक-प्रसून की भी छवि की गर्वता का हरण करने वाला, त्रैलोक्य-सौन्दर्य से पूर्ण लज्जाधर्म-निवारक कमनीय ( **सुन्दर** ) स्त्री का सान्निध्य कौन पुरुष नहीं करना चाहता ( **सभी चाहते हैं** )।७३

**जघन**

●

विधि ने विशाल हाथी के कर में कठोरता, कदलिका ( **कदली** ) में अति जड़ता ( **निर्जीवता** ), हाथी के शुण्ड में बहुत-सी रेखाएँ निर्मित की हैं, तुम्हारे जघनों में समता क्यों? ( **रमणी के जाँघ की उपमा, 'करभोरु', 'कदलिस्तम्भ' कहकर दी जाती है, कवि की दृष्टि में असंगतता** ) है।७४

**सनख चरण**

●

नायिका ( **कोमलाङ्गी** ) के दोनों पद-तल सुन्दर, शुभलक्षणों से युक्त, यावक- रञ्जित होने से मञ्जुल, सुघर अंगुलियों के नख चन्द्राभा से शोभित हैं, कमल चरणों में मनहर नूपुर ध्वनित हैं, मराल गति, दीप्तवेष, अनुराग-भूमि उसकी ( **स्वरूप की** ) कान्ति ( **अतिमोहक सौन्दर्य** ) कामशरों से पूर्ण निषंग ( **तरकश** ) धारण किये हुए हैं अर्थात् आसक्ति भावों को उपजाने वाले हैं।७५

## सर्वाङ्गवर्णनम् ( श्लोक )

•

उद्यद्विद्युत्मन्दकान्तिरुचिरा ताम्बूलताम्राधरा,
राकाचन्द्रमुखी विलोलविलसन्नेत्राञ्जनासुस्मिता।
कौसुम्भातिमनोज्ञ चारुवसना निर्दोषभूषावृता,
कान्ता[१] निर्जितपद्मगन्धनिचया दृष्टाद्य[२] सा कामिनी।।७६।।

**इति श्रीमद्गौड विप्रवर मिश्रबाबूरायात्मजसुखलाल मिश्र विरचितायां शृङ्गारमालायां नायिका-शिखा-नख-वर्णनं नाम द्वितीयं विरचिनम् ।।२।।**

•

---

१. कान्त्या, इति सार्थको पाठः।

२. दृष्टाऽद्य।

## सर्वांग वर्णन

•

विद्युत-सी मंद ( मधुर ) कान्ति-से सुन्दर, ताम्बूल-से ताम्र ( लाल ) अधर, अंजन से शोभित विलोल ( चञ्चल ) नेत्र, पूर्णमासी के चन्द्र-सम सुस्मित ( मुसकराता ) मुख, कुसुम्भी रंग का अति मनोज्ञ वस्त्र धारण किये, सुन्दर आभूषणों से भूषित, पद्मगन्ध की समग्रता को पराजित कर देने वाली लावण्यवती, आज ऐसी वह कामिनी मैंने देखी।७६

**इति श्रीमद्गौड विप्रवर मिश्र बाबूरायात्मज सुखलालमिश्र विरचित श्रृङ्गारमाला में नायिका शिखा-नख वर्णन नामक दूसरा विरचिन।।२।।**

•

ऊर्णापट्ट विघट्टितांशुकवरैनानाविधैर्भोजनै-
रेलावीजलवंग नागलतिकापर्णाभिपूर्णाननैः।
श्यामाभिः सविधस्थिताभिरभितः पीतासवाभिर्मुदा-
नीयन्तेधनिभिः सुखेन सततं हैमन्तिका वासराः।।८९।।

[ ऊनी पर रेशमी वस्त्र डालकर देह में लपेटे ( ऊनी पर रेशमी चादर साटकर ओढ़े हुए ) विविध प्रकार के भोजनोपरान्त, इलायची के दाने और लवंग से युक्त नागलतिका ( पान ) के पत्तों से पूरित-मुख वाले, जिनके चारों ओर सुन्दर स्त्रियाँ नियमतः ( नियत स्थानों पर ) स्थित रहती हैं, आसव पान किये हुए धनिकों द्वारा आनन्दित मन, हेमन्तकालीन दिन सुखपूर्वक व्यतीत किये जाते हैं।८९ ]

●

## तृतीयं विरचिनम्

●

### अथ षट्ऋतून्वर्णयति

**तत्र वसन्तः**

●

रम्भाध्वजानवदलाः पुरतः स्फुरन्त्यो,
नूता गजास्तरलिता मरुतस्तरङ्गाः।
यस्यानुगास्तरवयेति पिकोग्र भाषी
[1]भृङ्गैः रक्ततः रक्ततिपरैर्नृपतिर्वसन्तः।।७७।।

हा[2] गतोसि मधुमारण दक्षो,
दूरदेशं वसतौ हरिरेतौ।
इन्दुनासहमधुर्मधुबन्धुर्नै[3]–
धनाय सखि मे प्रयते ते।।७८।।

किं करिष्यति मधुर्मदरक्तः,
कामिनीविरहवर्द्धन सक्तः।
[4]आगतोस्ति सविधे नहि
जाने तदुवदस्व चतुरे मतिदाने।।७९।।

---

१. दुर्बोधो पाठः

२. हाऽऽगतोसि

३. निधनाय

४. आगतोऽस्ति

# तीसरा विरचिन

●

## षट् ऋतु-वर्णन

**वसन्त**

●

रम्भा ( कदली ) रूप ध्वज के नवपत्र सामने लरज रहे हैं, ( उन्नत ) मलयगिरि से आन्दोलित मारुत की लहरें, उनका अनुगमन करते वृक्षों पर तारस्वर-भाषी कोकिल, भ्रमर चारों ओर नृपति वसन्त का स्तुतिगायन कर रहे हैं।७७

हा ! दूरस्थ देश के वासी, मारण में निपुण ( मेरे लिए ) कारणस्वरूप ये दोनों वसन्त और मलयानिल आ गये, चन्द्रमा के संग मधु ( वसन्त ) और मधुबन्धु ( कामदेव ) मेरे निधन के लिए प्रयत्न कर रहे हैं।७८

कामिनी के विरह को बढ़ाने में सक्षम, प्रचण्ड ( उत्साहित ) वसन्त विधि-विधानसहित आ गया है, न जाने क्या करेगा हे चतुरे ! ( सखि ! ) समझदार हो, तुम ही बताओ।७९

## चन्द्रिका-वर्णनम्

●

ब्रह्माण्डं किमु राजतं किमु यशो वस्त्रेण संछादितं,
त्रैलोक्यं रघुनन्दनस्य परितः किं चन्द्रकं वर्षति।
किं पाटीरविलिप्त कायककुभः किं भूषिता मौक्तिकै-
र्हीरक्षीरतुषारहारधवला किं राजते कौमुदी।।८०।।

युव युवतीनां हृदये निजसुधया, सौख्यमावहति।
अनियत[१]शुचि रुचि रुचिरा चन्द्रकभाश्चन्द्रिकालसति।।८१।।

## ग्रीष्मः

●

सुगन्धिसारा जलयंत्रधारा,
विमुक्तहाराश्च वने विहाराः।
उशीरगेहं गतशीतलेहं[२]
ग्रीष्मेऽति भीष्मे सुखदा भवंति।।८२।।

शीत प्रदेशांश्च मनोज्ञवेषान्,
सुगन्धि नीरं शिशिरं समीरम्।
श्यामां च वामां वदनाभिरामां,
ग्रीष्मे मनुष्याः सुभगा भजंते।।८३।।

---

१. 'शुचि' इति अधिको

२. शीतलेऽहं

## चन्द्रिका-वर्णन

•

क्या समस्त ब्रह्माण्ड रजत ( चांदी का ) हो गया है, अथवा ( पूरा ) त्रैलोक्य यशरूप वस्त्र से ( यश को धवल कहा जाता है ) आच्छादित हो गया अथवा क्या यह रघुनन्दन के चारों ओर ज्योत्स्ना बरस रही है, क्या दिशारूप यह शरीर ( धवल ) तुषार-हार धारण किये धवल कौमुदी है?८०

अपने अमृतरस से युवक-युवतियों के हृदय में आनन्द उपजाती, अनिश्चित ( असाधारण ) प्रकाश से दीप्त ( सुन्दर ) चन्द्र-आभा यह चन्द्रिका शोभित हो रही है।८१

## ग्रीष्म

•

भीषण ग्रीष्म में जलयंत्र से छोड़ी गयी सुगन्धित जलधार-युक्त उपवन-विहार एवं शीतल चन्दन-भवन सुखदायक होते हैं।८२

ग्रीष्म में मनुष्य शीतप्रदेश, मनोज्ञवस्त्र, सुगन्धित जल, शीतल वायु, छाया तथा सुमुखी वामा का आश्रय ग्रहण करते हैं।८३

## वर्षा

•

मदाविलं वारिद बारणेन्द्रं,
स्फुरन्तमेतं कृत वक्रतुण्डम्।
कामोनियन्ता मयि संनियुक्ते,
हरिं विना किमनुकरोमि भद्रे।।८४।।

गर्जंति मेघाश्चपलाश्चलन्त्यः
खद्योतसंघाः सखि विस्फुरन्तः।
कथं विदूयेत मनो न तस्याः
यस्याः गतः प्राणपतिर्विदेशे।।८५।।

## शरत्

•

पूर्णचन्द्रवदना कुमुदाक्षी,
कौमुदीस्मितरुचिः शुचिदेशाः।
तारकाभरणभूषिताः गात्रा
हंसदंतरुचिराऽभ्र सुकेशाः।।८६।।

पुष्पसौरभविलासितगन्धा,
गौरवर्ण तनुरुज्ज्वल वेषा।
राजते रसिकमोहन कामा,
कामिनीव मुदिता शरदेषा।।८७।।

## युग्म हेमन्तः

•

सम्पूर्णेन्दुमुखी विशालनयना तूनीरनासास्फुरत,
सुभ्रूर्मञ्जुलनीलकेशनिचया बिम्बाधरा कामिनी।
हेमन्तेऽतिमृदुज्ज्वले सुशयने ताम्बूलगन्धैर्युते,
धन्येनांतिमदालसा नववधूः शेते समालिङ्गिता।।८८।।

वर्षा

•

मददूषित ( मदायित ) वारणेन्द्र निजशुण्ड को वक्र किये जैसे भयावह ये बादल मद भाव प्रकटाते ( आकाश में झुके हुए ) दिखायी पड़ रहे हैं, काम को दमन करने में सक्षम, मुझमें अनुरक्त हरि (प्रिय) के अभाव में भद्रे! ( सखि! ) मैं क्या करूँ? ( मैं उद्विग्न हो रही हूँ )।८४

मेघ गरज रहे हैं, चपला ( विद्युत् ) दमक रही है, हे सखि! खद्योतसमूह ( जुगुनू ) चमक रहे हैं ( उस वातावरण में ) उस ( नायिका ) का हृदय, जिसका प्राणपति (प्रियतम) विदेश गया है, कैसे सन्तप्त ( उद्वेलित ) न हो। ८५

शरद

•

यह शरद् रसिकों को रागायित-मोहित करने वाली मुदिता कामिनी ( नायिका )-सदृश शोभित हो रही है-पूर्णचन्द्र जिसका मुख, कुमुद जिसके नेत्र, चांदनी जिसकी स्मित ( मुसकान ) तारक रूप आभूषणों से भूषित हैं, जिसके शरीरांग, हंस जिसके धवल दांत और अभ्र जिसके सुन्दर केश, कुसुम सौरभ-गंध से विलसित गौरवर्ण एवं उसका वेश धवल पवित्र है।८६-८७

हेमन्त

•

पूर्णचन्द्रमा-सम मुख, विशाल नेत्र, तूणीर-सदृश स्फुरणशील नासिका, सुन्दर भ्रू, मनोहर नील केशगुच्छ, बिम्बोष्ठ वाली कामिनी ( नायिका ), हेमन्तकाल में अत्यंत कोमल स्वच्छ शय्या पर ताम्बूलगन्ध से युक्त, मद के कारण अति अलसायी, समालिंगित नववधू सो रही ( धन्य ही रही ) है।८८

ऊर्णापट्ट विघट्टितांशुकवरैनानाविधैर्भोजनै-
रेलावीजलवंग नागलतिकापर्णाभिपूर्णाननैः।
श्यामाभिः सविधस्थिताभिरभितः पीतासवाभिर्मुदा-
नीयन्तेधनिभिः सुखेन सततं हैमन्तिका वासराः।।८९।।

**शिशिरम्**

●

प्रियाया वदने यावत्यदवासं निपातयेत्।
तावत्कटाक्षधाराभि कृष्णोरंगेन रञ्जितः।।९०।।

काञ्चिन्मुखेलिम्पति गन्धिचूर्णैः,
काञ्चित्समालिङ्ग्य करे दधाति।
कृष्णोरसार्द्रां कुरुतेद्य[1] काञ्चित्-
ऊहोहोरवैः क्रीडति कामिनीषु।।९१।।

सुगन्धिचूर्णेन विलिम्पनस्य,
मिषेण कान्तामुखमाचुचुम्ब।।
करोसि किं कृष्ण न लज्जसे त्वं,
सख्येत्युपालब्ध हरिः पुनातु।।९२।।

धूर्त्तोय[2]मेवेति वृजाङ्गनाभि-
र्मत्वा गृहीतः करयोमुरारिः।
मध्ये तु तासामिव सप्रभाति-
विद्युल्लताभिर्वृतमेघखण्डः।।९३।।

**पर्वतान्योक्तिः**

●

महोन्नतः पीनतरः पृथिव्या,
धाता च भर्त्ता पशुपक्षिणाञ्च।
महीरुहाणां स्थितिरम्बुपातैः
कठोरतैर्वाद्रिपतेस्तु दोषः।।९४।।

---

१. कुरुतेऽद्य २. धूर्त्तोऽयमवेति

ऊनी पर रेशमी वस्त्र डालकर देह में लपेटे ( **ऊनी पर रेशमी चादर साटकर ओढ़े हुए** ) विविध प्रकार के भोजनोपरान्त, इलायची के दाने और लवंग से युक्त नागलतिका ( **पान** ) के पत्तों से पूरित-मुख वाले, जिनके चारों ओर सुन्दर स्त्रियाँ नियमतः ( **नियत स्थानों पर** ) स्थित रहती हैं, आसव पान किये हुए धनिकों द्वारा आनन्दित मन, हेमन्तकालीन दिन सुखपूर्वक व्यतीत किये जाते हैं।८९

**शिशिर**

●

प्रिया के मुख में वास ( **सुगन्धित द्रव** ) जैसे ही छोड़ता है, उसके कटाक्ष से ( **वह** ) तत्क्षण कृष्ण रंग में रंग उठता है।९०

इस शीतकाल में क्रीडा करती कामिनियों में किसी के मुख में सुगंधि चूर्ण का लेप होता है, किसी को आलिंगित करके उसके हाथ में रखा जाता है, हो-हो ध्वनि के साथ इस क्रीडा-अवसर पर कोई कृष्ण को रागरस से आर्द्र कर देती है।९१

सुगंधि-चूर्ण लेप के व्याज से कांता ( **प्रिया** ) के मुख का चुम्बन कर लिया ( **ऐसा होने पर** ), क्या करते हो कृष्ण, लज्जा नहीं है तुमको 'सखि द्वारा इस रीति से उपालम्भित हरि' रक्षा करें। ९२

'यह धूर्त है यह' ऐसा मानकर ब्रजांगनाओं (ब्रज की बालाओं) द्वारा कृष्ण पकड़ लिये गये, उनके मध्य प्रभायुक्त विद्युल्लताओं द्वारा घिरा हुआ मेघखण्ड-सा प्रतीत हुआ। ( **मेघरूप-कृष्ण विद्युतरूप-ब्रजबालाओं से घिर गये** )।९३

**पर्वतान्योक्ति**

●

पृथिवी का अत्यन्त ऊँचा, विशाल, विविध धातुओं से सम्पन्न, पशु एवं पक्षियों का भरण-पोषण करनेवाला, वृक्षादि वनस्पतियों की स्थिति ( **अस्तित्व** ) जलवर्षण के कारण ( **जलवर्षण का आधार भी यही है** ) है, तथापि अद्रिपति ( **हिमालय** ) में एक दोष है, कठोरता।९४

**चन्द्रकलान्योक्तिः**

●

मित्रेस्तगे समुदिता मुदिता प्रभाभिः,
कौटिल्यमावहति वारुणिकां प्रयाता।
पीयूषदीधितिकला यदिचापि बाला,
शम्भो सुसंगवशतो जगतो नमस्यात्।।९५।।

भो मित्र हंस कथमत्र समागतोसि[१],
काकावलीभिः सेवित एष देशः।
यत्रश्चगर्दभमहत्त्वमुदेति नित्यं,
तस्मिंस्थले वद कथं करिणां प्रवेशः।।९६।।

**वृक्षान्योक्तिः**

●

[२]सैत्यं दधासि पथिके निजछाययात्वं,
पुष्पं ददासि च फलं सहसार्थिने च।
उच्चः सुभूमिजनितोसि मनोहरोसि,
जाड्यं तवाङ्घ्रिपदनोति मदीय चेतः।।९७।।

**प्रस्ताविकौ**

●

सौभाग्यमारोग्यमुदारतावरा,
[३]कृष्णेथवाशूलिनि भक्तिरीशिता।
विद्वत्वसौन्दर्यकवित्वशक्तयोः
भाग्येन लभ्याः सुकुलीनतापि च।।९८।।

---

१. समागतोऽसि

२. शैत्यं

३. कृष्णेऽथवा

### चन्द्रकलान्योक्ति

•

सूर्य के अस्ताचल चले जाने पर उदित होकर प्रभा से विकसित हो उठती है, पश्चिम ( दिशा ) को जाते समय कुटिलता ( वक्रता ) धारण कर लेती है, अमृत प्रकाशमयी ( यह चन्द्रकला ) यदि कहीं, यह ( बालचन्द्र ) कला शङ्कर, के संग वास करने लगती है तब जगत् के लिए वन्दनीय हो जाती है।९५

हे मित्रहंस ! यहाँ क्यों आये हो, यह तो काकसमूह से पूर्णतः घिरा हुआ (देश) स्थान है, जिस स्थान पर नित्य गर्दभ का महत्त्व ( गुणगान ) है, उस स्थान पर बताओ हाथी का प्रवेश कैसे सम्भव है? ( काक-मूर्ख वाचालों में निर्मल बुद्धि सज्जन का न रहना ही उचित है एवं गर्दभ जैसा भारवाही जन हों जहाँ, वहाँ तीव्रबुद्धि गज जैसे विशालकाय प्राणी की आवश्यकता? ) ९६

### वृक्षान्योक्ति

•

अपनी छाया से तुम पथिक के लिए शीतलता धारण ( प्रदान ) करते हो, अर्थी के लिए पुष्प तथा फल अनायास देते हो, उच्च सुघर भूमि पर पैदा हुए हो, मनोहर हो, मेरा हृदय इस अनासक्ति भाव के कारण तुम्हारे चरणों में नत हो जाता है।९७

### प्रस्ताविकौ

•

सौभाग्य, आरोग्य, उदारता, कृष्ण अथवा शङ्कर के प्रति भक्ति भावना, विद्वत्ता, सौन्दर्य और कवित्वशक्ति भाग्य से तथा उत्तमकुल में जन्म लेने से भी प्राप्त होने योग्य हैं।९८

सुभामिनी भोगरसज्ञता च,
मनोज्ञता सज्जनशीलवृतिः।
सुकीर्तिरत्युज्ज्वल संततिश्च,
भवन्तिलोकेऽखिल भाग्यभाजाम्।।९९।।

श्रीदेवी

●

संसारार्णवनौका विनयगुणयाऽनुकम्पयावाह्या।
श्रद्धादृढतरवंशा जगदम्बा पादयो प्रणतिः।।१००।।

श्रीमहादेवः

●

चञ्चच्चन्द्रकलाललाटफलके गङ्गां जटाजूटके।
ग्रीवायां भुजगोपवीतममलां कान्तिं च संविभ्रती।।१०१।।

टङ्काभीति मृगेष्टपाणिरभितो देवासुरैर्वन्दिता।
पापान्नस्त्रिविलोचनशिवतनुस्त्रैलोक्यसारापरा।।१०२।।

श्रीकृष्णः

●

यल्ललाटफलके लिखितं,
तन्नान्यथा भवति किं भ्रमणेन।
कृष्णपादयुग पंकज-रेणूनूरे,
भजस्व मनसा भ्रमरेण।।१०३।।

श्रीरामः

●

[1]दीनोहमस्मि करुणाकरदीनबन्धु-
स्त्वं भूमिदेवकुलजोपि च भिक्षुरस्मि।

---

१. दीनोऽहं

सुभामिनी ( **सुन्दर पत्नी** )-संग भोग-रस की अज्ञता ( **ज्ञान** ) सज्जन में शीलवृत्ति की सुन्दरता, धवलयश एवं कीर्तिशाली सन्नतति सम्पूर्ण संसार में भाग्यशालिन् को प्राप्त होते हैं।९९

**श्रीदेवी**

●

दृढ़तर श्रद्धा एवं विनीत भाव से प्राप्त होने वाली, जिसकी कृपा से संसार-सागर की नौका पार करने योग्य होती है, उस जगदम्बा के चरणों में प्रणाम है।१००

**श्रीमहादेव**

●

ललाट पटल पर चंचलचन्द्र-कला, जटाजूट में गंङ्गा, गले में भुजग का पवित्र यज्ञोपवीत और रस की कान्ति सुन्दररीति से धारण करते हैं।१०१
मृगेष्ट पाणि देव-असुर ( **दोनों चमेली-दण्ड-चमेली की माला हाथ में लिए** ) क्रोध के भय से उनकी ओर उन्मुख रहते हैं ( **शिव की** ) वह कान्ति ( **त्रिलोचन शिवरूप** )-मय देह त्रिलोक मात्र का पराक्रम मूल है।१०२

**श्रीकृष्ण**

●

ललाटपटल पर जो अंकित हो गया, वह अन्यथा नहीं होता, इधर-उधर घूमने से क्या लाभ? मन-भ्रमर को श्रीकृष्ण के चरणकमल की धूल के प्रति संलग्न करो।१०३

**श्रीराम**

●

मैं दीन हूँ, हे करुणाकर तुम दीनबन्धु हो, भूमिदेव ( **द्विज** ) कुलोत्पन्न होकर

दातासि भानुकुलसूनुरहं च दुःखी।
दुःखापहासि मम भेत्सि कथं न दुःखम्।।१०४।।

**श्रीगणेशः**

●

सिद्धिबुद्धिसहितो निज भक्तान्
यः प्रपूरयति कामकदम्बैः।
विघ्नराज उमया परिपुष्टः
कार्यसिद्धिमतुलां स तनोतु।।१०५।।

**श्रीसूर्यः**

●

जीवान्समुत्पादयति प्रभाते,
मध्याह्नवेलामनुसृत्य याति।
सायं पुनः संहरते त्रिमूर्ति-
र्मातण्डदेवाय नमौस्तु तस्मै।।१०६।।

**श्रीब्रह्मा**

●

निजमुखनिर्गतवेदैः विप्रबोधितं येन जगदखिलम्।
चतुराननाय तस्मै प्रणतिर्मे सरस्वती जनकाय।।१०७।।

**श्रीसरस्वती**

●

कुन्देन्दु कान्तिधवला नवलाऽखिलाङ्गैः,
पञ्चाशदक्षर विनिर्मित देह-यष्टिः।
वीणा निनादनिपुणा प्रकरोति नित्यं,
वाग्देवतां वचसि मे नितरां निवासम्।।१०८।।

भी भिक्षुक हूँ, भानुकुल पुत्र ( राम ) हो ( तुम ) और मैं दुःखी हूँ, दुःखहरण हो ( तुम ) मेरे दुःख मिटाते क्यों नहीं। १०४

**श्रीगणेश**

●

सिद्धि-बुद्धि-संग अपने भक्तों को जो मनोकामनाओं से (की कामनाएँ) पूर्ण करताहै, उमा से परिपुष्ट वह ( **गणेश** ) कार्य-सिद्धि की अतिशयता का विस्तार करे। १०५

**श्रीसूर्य**

●

प्रभातकाल में प्राणिजनों को प्रादुर्भूत (जीवन्त) करता, मध्याह्न-समय का अनुगमन करता हुआ चलता, सायं-समय पुनः त्रिमूर्ति ( **ब्रह्मा, विष्णु, महेश** ) को एकाकार करता, ( **उसी** ) देव मार्तण्ड ( **सूर्य** ) को नमस्कार है **( तात्पर्य यह कि सूर्य में ब्रह्मा, विष्णु एवं महेश-त्रिमूर्ति सन्निविष्ट हैं- वह सूर्य प्रातः प्राणियों में जीवन का संचार करता है, दोपहर में उन्हें प्रौढ़ करता तथा सायं सुप्त कर देता है )**।१०६

**श्रीब्रह्मा**

●

अपने मुख से निकले वेदों द्वारा जिसने समस्त जगत् को ज्ञान दिया, सरस्वतीजनक उस चतुरानन ( **ब्रह्मा** ) को प्रणाम है।१०७

**श्रीसरस्वती**

●

इन्दु-सदृश कुन्दपुष्प की कान्ति-सी धवल, नव-नवल अंगों, पचपन अक्षरों द्वारा ( **पंचाशदाक्षर सरस्वती मंत्र** ) निर्मितदेह, वीणा-वादन में दक्ष वाग्देवता, निरन्तर मेरी वाणी में निवास करती रहे ( **निवास करो** )। १०८

**श्रीकामदेवः**

●

नीलेन्दीवरवर्णसुन्दरतनुः पाथोजचक्षुर्पुवासं,
पूर्णेन्दुसमानवक्त्रनिभया सौन्दर्यसारं वहन्।
रत्नालङ्कृतिभूषितो रतिपतिः पुष्पेषु धन्वाऽनिशं
पूर्णानन्दभरस्त्रिलोक विजयी मीनध्वजो राजते।।१०९।।

**श्रीगुरुदेवः**

●

संसारसर्पमुखमर्दनतार्क्ष्यरूपाः
विज्ञातनापटल पाटित मोहकूपाः।
येषां कटाक्ष कलिताः फलिताःलसंति,
गङ्गेशमिश्र गुरवः सततं जपन्ति।।११०।।

**अथ कविवंशवर्णनम्**

●

पानीयपथ्यात्परतस्तुमार्गो
षट्क्रोशमध्येहि घटोत्कचस्य।
ग्रामोघरोण्डेति प्रसिद्धनामा,
पूर्वोस्थितास्तत्रपुरामदीया।।१११।।

श्रीविष्णुदत्तः स्वकुलाब्जभानु-
र्नारायणस्तत्तनुजो बभूव।
कौशल्यगोत्रो यजुषामधीताः
माध्यन्दिनीयां द्विज गौडजोशी।।११२।।

तस्यात्मजोऽस्मागमत्तु काश्यां,
षड्दर्शनीवैरमपुत्र - मंत्री।
दामोदरो वैद्यकग्रन्थकर्त्ता
श्रीरामकृष्णस्तदपत्यमासीत्।।११३।।

**श्रीकामदेव**

●

नीलकमल वर्ण-तन, कमलनेत्र, पूर्णिमा के चन्द्र-सदृश जिसका मुख सौन्दर्य-सर्वस्व को धारण किये हुए है, रत्नालङ्कारों से शोभित रतिपति ( **कामदेव** ), पुष्पधनु से सतत पूर्णानन्द भरने वाला लोकविजयी मीनध्वज ( **कामदेव** ) शोभित हो रहा है। १०९

**श्रीगुरुदेव**

●

संसाररूप सर्प के मुख का मर्दन करने के लिए गरुण (अज्ञान निवारक) प्रत्यक्ष ज्ञानपटल से मोहरूप कूप को पाट देने वाले, जिनकी दृष्टि मात्र-अवलोकन से, आश्रय प्राप्त कर विकसित ( **ज्ञानवान्** ) हो, शोभा पा रहे ( **वह** ) गंगेशमिश्र गुरुवर को निरन्तर स्मरण करते हैं। १११०

**कवि-वंश-वर्णन**

●

पानीपत के आगे मार्ग में छह कोस के बीच ही पूर्व में घटोत्कच का प्रसिद्ध घरोण्डां ग्राम में मेरापुर ( **निवास** ) स्थित है।१११

कौशल्यगोत्रीय यजुर्वेदीय गौड़ जोशी द्विजश्रेष्ठ अपने कुल कमल में सूर्य सदृश श्रीविष्णुदत्त के पुत्र नारायण हुए।११२

उनके पुत्र वहाँ से काशी चले गये, वह षड्दर्शन के विद्वान्, वैरमपुत्र ( **कवि रहीम** ) के मंत्री थे, नाम था दामोदर, वह वैद्यक ग्रन्थों के रचयिता थे, उनके पुत्र रामकृष्ण थे।११३

तुलसीमाधवगङ्गारामाख्या-
स्तत्तनूद्भवाश्चासन्।
माधवराम सुपुत्रोहृदयरामो,
इति सुगीयते मनुजैः।।११४।।

साहित्ये रसग्रन्थकृद्बुधवरस्तस्याङ्गजातः कवि-
र्बाबूराय इति प्रसिद्धिमगमद्काशीपुरे चार्गले।
तत्पुत्रेण मया कृता रसमयीमालारसोपासकान्-
जप्ता[1] प्रापयितुं गुणैरपियुता[2]कल्पारस ब्रह्मा[3]णि।।११५।।

सुखलालेन सुकविना रचिता-
शृङ्गारमणिमयीमाला।
कण्ठे सा रसिकानां सगुण-
सुवर्णा विलासमातनुताम्।।११६।।

सुधांशु व्योमवस्विन्दौ,
वर्षे ज्येष्ठसिते रसे।
शुभे शृङ्गारमालेयं-
रविपुष्पे सुगुम्फिता।।११७।।

इति श्रीमत्साहित्यशास्त्रानुभवरसिक गौड विप्रवरस्वकर्मानुष्ठान्तत्पर श्रीमिश्रहृदयरामात्मज बाबूराय मिश्र सूनु सुखलालमिश्रेण विरचितायां शृङ्गारमालायां सङ्कीर्णवर्णनं नाम तृतीयं विरचिनम्।।३।।

•

सम्पूर्णेयं शृङ्गारमाला

---

१. 'जाता' इति पाठो संगतः
२. गुणैरपियुतामाकल्परस
३. ब्रह्मणि

उनके तुलसीराम, माधवराम तथा गङ्गाराम तीन पुत्र थे, माधवराम के पुत्र हृदयराम लोगों द्वारा प्रशंसित हुए।११४

उनके पुत्र बाबूराय साहित्य में रसग्रन्थ ( **रसशास्त्र-काव्यशास्त्र** ) के कर्त्ता श्रेष्ठ विद्वान् के रूप में काशी तथा सीमा में प्रख्यात हुए। उनके पुत्र मेरे द्वारा रसोपासकों के लिए यह रसपूर्ण ( **शृङ्गाररसमयी** ) माला तैयार की गयी है जो अपने गुणों द्वारा कल्पों-पर्यन्त ब्रह्मानन्द रूप रसानन्द प्राप्त कराने वाली है।११५

सुकवि सुखलाल द्वारा रचित यह शृङ्गार-मणियों की माला, सुन्दरगुणों और सुन्दररूप ( **काव्यगुण-पूर्ण-सुन्दर अच्छमणि, सुन्दर धागे से गुंथी** ) के कारण रसिकों के कण्ठ में ( **पड़कर** ) उन्हें आनन्दित करे।११६

सुधांशु ( **एक** ) व्योम ( **शून्य** ) वसु ( **आठ** ) इन्दु ( **एक** ) अर्थात् संवत् १८०१ वर्ष ( **ईसवीय सन् १७४५** ) के ज्येष्ठ मास शुक्ल पक्ष, रविवार, पुष्य नक्षत्र के योग में यह शुभ शृङ्गारमाला गुम्फित हुई।११७
**( अंकों की गणना बायीं ओर से होती है। )**

**इति श्रीमत्साहित्यशास्त्रानुभवरसिक गौड विप्रवर स्वकर्मानुष्ठान-**
**तत्पर श्रीमिश्रहृदयनारायणात्मज बाबूरायमिश्र सूनु**
**सुखलालमिश्र विरचित शृङ्गारमाला में**
**सङ्कीर्ण वर्णनामक तीसरा विरचिन।।३।।**

**शृङ्गारमाला सम्पूर्ण**

